| | |
|---|---|
| छात्राः नवानि पुस्तकानि पठन्ति । | छात्र नई पुस्तकें पढते हैं । |
| तुरङ्गाः प्रचारेषु वेगेन धावन्ति । | घोडे गोचर भूमि में तेज दौडते हैं । |
| गोविन्दः अनुजाय क्रुध्यति । | गोविन्द भाई पर क्रोध करता है । |
| महीपः दरिद्राय धनं ददाति । | राजा गरीब को धन देता है । |
| आपणे भृत्या भारान् वहन्ति । | बाजार में कुली भार ढोते हैं । |
| ऋतुषु वृक्षेषु फलानि जायन्ते । | ऋतु में पेडों पर फल लगते हैं । |
| सज्जनाः सदैव सत्यं वदन्ति । | अच्छे लोग सदा सत्य बोलते हैं । |
| भक्ताः कृष्णस्य मन्दिरं यान्ति । | भक्त कृष्ण के मन्दिर को जाते हैं |
| युद्धेषु शूराः पराजयन्ति । | युद्ध में वीर शत्रुओं को जीतते हैं । |
| भेकाः तडागेषु नन्दन्ति । | मेंढक तालावों में टर्राते हैं । |
| अहं नित्यं संस्कृतं भाषे । | मैं सदा संस्कृत बोलता हूँ । |

लिखत प्रश्नानामुत्तराणि—

कः पुष्पाणां रसं चूषति ? कः रामस्य नामानि रटति ? कैः खेलन्ति बालाः ? क्व कूर्दन्ति वानराः ? कानि ग्राम्याः हलेन कर्षन्ति ? कानि पुस्तकानि पठन्ति छात्राः ? क्व धावन्ति वेगेन तुरङ्गमाः ? कः कस्मै क्रुध्यति ? कस्मै महीपः ददाति धनम् ? कान् वहन्ति आपणेषु भृत्याः ? केभ्यः ऋतुषु फलानि जायन्ते ? के सदैव सत्यं वदन्ति ? के कृष्णस्य मन्दिरं गच्छन्ति ? के जलाशयेषु नन्दन्ति ?

रचयत वाक्यानि—

मधुपः, क्रीडनकैः, हलेन, प्रातः, अनुजाय, ऋतुषु, कदा, कुत्र, चूषामि, व्याहरति, सायम, सदैव, नित्यम्, संस्कृतम् ।

शब्दरूपाणि—

| | | |
|---|---|---|
| फलम् | फले | फलानि |
| मन्दिरम् | मन्दिरे | मन्दिराणि |

धातुरूपाणि—

हरति हरतः हरन्ति फलति फलतः फलन्ति
भाषते भाषेते भाषन्ते वन्दते वन्देते वन्दन्ते

वाचनम्—

भाषते सज्जनः सत्यं भक्तो गच्छति मन्दिरम् ।
भेकाः नन्दन्ति कूपेषु सन्ति वृक्षेषु वानराः ॥

—०—

## त्रयोदशः पाठः

—०—

शब्दकोषः—

| | | | | | |
|---|---|---|---|---|---|
| वदिष्यति | = | बोलेगा | इदानीम् | = | अभी |
| तरिष्यति | = | तैरेगा | अखिलम् | = | सम्पूर्ण |
| पास्यति | = | पियेगा | प्राचारः | = | गोचर भूमि |
| स्थास्यति | = | ठहरेगा | सांयात्रिकः | = | मल्लाह |
| पठिष्यति | = | पढ़ेगा | वासरः | = | दिन |
| करिष्यति | = | करेगा | सलिलम् | = | पानी |
| अर्जिष्यति | = | अर्जन करेगा | हाटकम् | = | स्वर्ण |

भविष्यत्काले वाक्यानि—

अहं पत्रं लिखिष्यामि । मैं पत्र लिखूँगा ।
चौराः सत्यं न वदिष्यन्ति । चोर सत्य नहीं बोलेंगे ।
अश्वाः क्षेत्रेषु चरिष्यन्ति । घोड़े खेतों में चरेंगे ।
दुग्धं पास्यति गोपालः । गोपाल दूध पियेगा ।
नृपालाः अखिलं देशं रक्षिष्यन्ति । राजा लोग पूरे देश की रक्षा करेंगे ।
नाविकाः पोतैः समुद्रं तरिष्यन्ति । मल्लाह जहाजों से समुद्र पार करेंगे ।
आर्या स्वेषां शास्त्राणि पठिष्यन्ति । आर्य लोग अपने शास्त्र को पढ़ेंगे ।
रवावहं विद्यालयं न यास्यामि । रविवार को विद्यालय नहीं जाऊँगा ।

ते नगरस्यातिथिगृहे स्थास्यन्ति। वे नगर के अतिथि घर में ठहरेंगे।
छात्राः अत्र व्यायामं करिष्यन्ति। यहाँ छात्र व्यायाम करेंगे।
चौराः राष्ट्रकोषात्स्वर्णं हरिष्यन्ति। चोर राज्य कोष से सोना चुरायेंगे
वैश्याः व्यापारेण धनान्यर्जिष्यन्ति। वैश्य व्यापार से धन कमायेंगे।
अहं अद्य मुम्बापुरीं गमिष्यामि। आज मैं बम्बई जाऊँगा।
सो अद्यात्र गीतां पठिष्यति। वह आज यहां गीता पढेगा।

लिखत प्रश्नानामुत्तराणि—

कः पत्रं लिखिष्यति? के सत्यं न वदिष्यन्ति? के क्षेत्रे चरिष्यन्ति? कः जलं न पास्यति? नृपालाः किं करिष्यन्ति? आर्याः किं करिष्यन्ति? कदा त्वं विद्यालयं न गमिष्यसि? तत्र क स्थास्यसि त्वम्? किं हरिष्यन्ति चौराः? छात्राः किं करिष्यन्ति? के धनमर्जिष्यन्ति? के शत्रून् जेष्यन्ति? कः सुखेन जीविष्यति? कगमिष्यति इदानींसः?

रचयत वाक्यानि—

सलिले, हाटकम्, वासराः, करिष्यन्ति, गमिष्यन्ति, स्थास्यति, अद्य, कोषात्, पास्यति, आर्याः, नृपाः, द्विजाः, इदानीम्।

शब्दरूपाणि—

धनम् धने धनानि धनम् धने धनानि

क्रियारूपाणि—

| | | |
|---|---|---|
| पठिष्यति | पठिष्यतः | पठिष्यन्ति |
| पठिष्यसि | पठिष्यथः | पठिष्यथ |
| पठिष्यामि | पठिष्यावः | पठिष्यामः |

सुभाषितम्—

करिष्यामि करिष्यामि करिष्यामीति नित्यशः।
अजरामरवत् प्राज्ञः विद्यामर्थं च चिन्तयेत्॥

—०—

# चतुर्दशः पाठः

शब्दकोषः—

| | | | |
|---|---|---|---|
| कोषः | = निधि | हिरण्यम् | = स्वर्ण |
| नक्रः | = मगर | झषः | = मछली |
| विश्वम् | = संसार | महीरुहः | = वृक्ष |
| भद्रम् | = कल्याण | निषादः | = भिल्लः |
| दर्दुरः | = मेंढक | मृगः | = हिरण |
| आनेष्यति | = लायेगा | कृषीवल; | = किसान |
| पतिष्यति | = पडेगा | गगनम् | = आकाश |

पुनः भविष्ये वाक्यानि—

| | |
|---|---|
| नक्राः समुद्रे तरिष्यन्ति । | मगर समुद्र में तैरेंगे । |
| आकाशात् जलं पतिष्यति । | आकाश से जल गिरेगा । |
| दर्दुरा तडागेषु संभविष्यन्ति । | तालाबों में मेढक उत्पन्न हो जायेंगे। |
| झषाः सलिले विहरिष्यन्ति। | मछलियाँ जल में विहार करेंगी । |
| कुमाराः कन्दुकेन खेलिष्यन्ति। | कुमार गेंद से खेलेंगे । |
| महीरुहाः फलानि धरिष्यन्ति। | पेड फल धारण करेंगे। |
| ममाऽनुजः पुस्तकमानेष्यति। | मेरा छोटा भाई पुस्तक लायेगा। |
| श्वः निषादाः मृगान् मारयिष्यन्ति। | कल भील हरिणों को मारेंगे । |
| तत्र बालाः क्रीडनकैः खेलिष्यन्ति। | वहाँ बच्चे खिलौनों से खेलेंगे। |
| अहं पक्वानि आम्राणि चूषिष्यामि । | मैं पके आम चूसूँगा। |
| ते सुन्दरान् लेखान् लिखिष्यन्ति। | वे सुन्दर लेख लिखेंगे । |
| ग्रामेषु कृषीवलाः सुखेन जीविष्यन्ति। | ग्रामों में किसान सुख से जियेंगे |
| अहमद्य विद्यालये स्थास्यामि। | मैं आज विद्याल में ठहरूँगा । |
| जलाशये तरिष्यति कूर्मः । | कछुआ तालाब में तैरेगा। |
| नदीषु समुद्रेषु च जायन्ते नक्राः। | मगर नदीयों और समुद्रों में होते हैं। |
| सदाफलो भवति नारिकेलवृक्षः। | नारियल का पेड सदाफली होता है। |

लिखत प्रश्नानामुत्तराणि—

क्व तरिष्यन्ति नक्राः ? कस्मात् पतिष्यति जलम् ? के तडागे संभविष्यन्ति ? क्व विहरिष्यन्ति झषाः ? क्व कूर्माः नन्दिष्यन्ति ? के नित्यं फलानि फलिष्यन्ति ? कः नवीनं पुस्तकमानेष्यति ? निषादाः किं करिष्यन्ति ? कैः क्रीडिष्यामः वयम् ? कः आम्राणि चूषिष्यति ? के लेखान् लिखिष्यन्ति ? के हिरण्यं हरिष्यन्ति ? क्व जीविष्यन्ति कृषाणाः ? नक्राः क्व जायन्ते ? के वृक्षाः नित्यं फलन्ति ?

रचयत वाक्यानि—

मृगाः, नक्राः, आकाशात्, अश्वाः, खेलिष्यन्ति, हरिष्यन्ति, स्थाष्यन्ति, नेष्यसि, आनेष्यति, धरिष्यति,

शब्दरूपाणि—

मकरः मकरौ मकराः केन काभ्याम् कैः

क्रियारूपाणि—

| | | |
|---|---|---|
| भविष्यति | भविष्यतः | भविष्यन्ति |
| भविष्यसि | भविष्यथ | भविष्यथ |
| भविष्यामि | भविष्यावः | भविष्यामः |

सुभाषितम्—

नास्ति विद्यासमं चक्षुः नास्ति सत्यसमं तपः ।
नास्ति रागसमं दुःखं नास्ति त्यागसमं सुखम् ॥

—०—

# पञ्चदशः पाठः

--०--

शब्दकोषः—

| | | | | | |
|---|---|---|---|---|---|
| तस्करः | = | चोर | कनकम् | = | काञ्चन |
| लोकः | = | प्रजा के लोग | तापसः | = | तपस्वी |
| शरैः | = | बाणों से | मम | = | मेरा |
| पत्रम् | = | चिट्ठी | स्म | = | था |
| कौतुकम् | = | तमासा | उदभवत् | = | उत्पन्न हुआ |
| उटजः | = | झोपडी | अहन् | = | मारा |
| पुरा | = | पहिले | आसीत् | = | था |

भूते वाक्यानि—

पुरा ब्राह्मणा वेदान् अपठन् । पहिले ब्राह्मणों ने वेदों को पढा ।
ततः ते शास्त्राणि अलिखन् । फिर उन्होंने शास्त्रों को लिखा।
समुद्रात् बहूनि रत्नानि उदभवन् । समुद्र से बहुत रत्न उत्पन्न हुए ।
पाणिनिः व्याकरणम् असृजत् । पाणिनि ने व्याकरण बनाया ।
कालिदासः नवानि काव्यान्यलिखत् । कालिदास ने नये काव्य लिखे
रामः तीव्रैः शरैः राक्षसानहन् । राम ने तीक्ष्ण वाणों से राक्षसों को मारा
कृष्णः गोपानामङ्गणेष्वखेलत् । कृष्ण गोपालों के आगन में खेलते थे
नृपाः सर्वान् लोकानरक्षत् । राजाओं ने सब लोगों की रक्षा की ।
कीशा मम फलानि अखादन् । बन्दरों ने मेरे फल खा लिए ।
नासीत्तदानीं तव ग्रामे विद्यालयः । तबतुम्हारे गांव मेंविद्यालय नहीं था
बालाः ऋक्षस्य कौतुकमपश्यन् । बालकों ने रीक्ष का तमासा देखा ।
अहं कृष्णस्य मन्दिरमगच्छम् । मैं कृष्ण के मन्दिर को गया था ।
त्वं तातस्य वृत्तान्तम् अपठः । तुमने पिताजी का समाचार पढा ।
राजकुमारः तुरङ्गमात् अपतत् । राजकुमार घोडे से गिर पडा ।
बालकः हठम् न अमुञ्चत् । बालक ने हठ नहीं छोडा ।

तापसाः वनेषु वसन्ति स्म । तपस्वी लोग जङ्गलों में रहते थे ।

तस्कराः गृहात् कनकम् अहरन् । चोरों ने घर से सोना चुरा लिया ।

लिखत प्रश्नानामुत्तराणि—

के वेदान् अपठन् ? के शास्त्राणि अलिखन् ? कस्मात् रत्नानि उद्भवन् ? कः व्याकरम् असृजत् ? कः रुचिराणि काव्यानि अकरोत् ? के लोकान् अरक्षन् ? कः राक्षसान् अहन् ? के वनेषु न्यवसन् ? कः तुरङ्गमात् अपतत् ? के गृहात् कनकम् अहरन् ? के के भल्लूकस्य कौतुकम् अपश्यन् ? कः अखिलं विश्वमसृजत् ?

रचयत वाक्यानि—

कनकम्, कौतुकम्, भल्लूकः, कीशः, तव, पुरा, मम, तस्य, वृत्तान्तम्, उटजः, अशोकः, पाणिनिः, कालिदासः, स्म ।

शब्दरूपाणि—

| | | | | | |
|---|---|---|---|---|---|
| तम् | तौ | तान् | तेन | ताभ्याम् | तैः |
| तस्मै | ताभ्याम् | तेभ्यः | तस्मात् | ताभ्याम् | तेभ्यः |

क्रियारूपाणि—

| | | |
|---|---|---|
| अवसत् | अवसताम् | अवसन् |
| अवसः | अवसतम् | अवसत |
| अवसम् | अवसाव | अवसाम |

सुभाषितम्—

अयं निजः परो वेति गणना लघुचेतसाम् ।
उदारचरितानां तु वसुधैव कुटुम्बकम् ॥

—०—

# षोडशः पाठः

शब्दकोष —

| | | | |
|---|---|---|---|
| पठ | = पढो | दीनः | = दरिद्र |
| गच्छ | = जाओ | विघ्नः | = विघ्न |
| रक्ष | = रक्षा करो | धनपालः | = धनिकः |
| आयान्तु | = आओ | प्रयत्नः | = प्रयत्न |
| अस्तु | = हो | आदेशः | = आज्ञा |
| उपादिशन्तु | = उपदेश करो | मनोरथः | = इच्छा |

आज्ञादिषु वाक्यानि—

| | |
|---|---|
| पाठं पठ । | पाठ पढो । |
| पत्रं लिख । | पत्र लिखो । |
| गृहं गच्छ । | घर जाओ । |
| धनं रक्ष । | धन की रक्षा करो । |
| कुशलमस्तु तव । | तुम्हारा कुशल हो । |
| चिरायुः भव त्वम् । | तुम चिरायु हो । |
| छात्राः विद्यालयं गच्छन्तु । | छात्र विद्यालय को जायें । |
| लोकनायकाः देशं रक्षन्तु । | नेतालोग देश की रक्षा करें । |
| जनाः सामाजिकाः भवन्तु । | लोग सामाजिक बनें । |
| ते उन्नता भवन्तु । | वे उन्नति प्राप्त करें । |
| लोकपालाः प्रजां न पीडयन्तु । | नेता लोग प्रजा को पीडा न दें । |
| बालकाः सदैव सत्यं प्रियं च वदन्तु । | बालक सदा सत्य और प्रिय बोलें |
| आचार्याः धर्मान् उपदिशन्तु । | आचार्य लोग धर्म का उपदेश करें । |
| धनपालाः दीनेभ्यः धनानि यच्छन्तु । | धनवान दरिद्रों को धन देवें । |
| विघ्ना विनाशमायान्तु तेषाम् । | उनके विघ्न विनष्ट हो जायें । |
| लोका भद्राणि पश्यन्तु । | लोगों का कल्याण हो । |

जनानां प्रयत्नाः सफलाः सन्तु। लोगों के प्रयत्न सफल हों।
तेषां मनोरथाः पूर्णा सन्तु। उनका मनोरथ पूरे हों।
ते सर्वे संस्कृतं पठन्तु। वे सब संस्कृत का अध्ययन करें।

लिखत प्रश्नानामुत्तराणि—

किं करोतु सः? किं लिखतु सः? क गच्छतु सः? किं कुर्वन्तु सर्वे? कथंभूता भवन्तु मानुषाः? के जनकस्य आदेशं पालयन्तु? लोकपालाः किं कुर्वन्तु? के सदैव सत्यं वदन्तु? के धर्मान् उपदिशन्तु? धनपालाः किं कुर्वन्तु? के विनाशमायान्तु? के भद्राणि पश्यन्तु? केषां मनोरथाः पूर्णाः सन्तु? के पठन्तु संस्कृतम्?

रचयत वाक्यानि—

पठ, लिख, गच्छ, रक्ष, खाद्, पिब, आगच्छ, विघ्नाः, भद्राणि, पूर्णाः, वदन्तु, पठन्तु, भवन्तु, सन्तु, अस्तु।

शब्दरूपाणि—

भद्रम् भद्रे भद्राणि     गृहात् गृहाभ्याम् गृहेभ्यः

क्रियारूपाणि—

| | | |
|---|---|---|
| पठतु | पठताम् | पठन्तु |
| पठ | पठतम् | पठत |
| पठानि | पठाव | पठाम |

सुभाषितम्—

धनानि जीवितं चैव परार्थे प्राज्ञः उत्सृजेत्।
सन्निमित्तं वरं त्यागो विनाशे नियते सति॥

—०—

## सप्तदशः पाठः

--०--

शब्दकोषः--

| | | | | | |
|---|---|---|---|---|---|
| शरणम् | = | रक्षण | ब्रूयात् | = | बोले |
| प्रियम् | = | मधुर | कुर्यात् | = | करे |
| गतम् | = | व्यतीत | परित्यजेत् | = | छोड दे |
| अपमानः | = | अनादर | स्मरेत् | = | स्मरण करे |
| श्वः | = | कल | व्रजेत् | = | जाये |
| समीक्ष्य | = | देखकर | आवर्षयेत् | = | आकर्षित करें |

विधौ वाक्यानि--

| | |
|---|---|
| सदा सत्यं ब्रूयात्। | सदा सत्य बोलना चाहिए। |
| न वदेत् सत्यमप्रियम्। | अप्रिय सत्य नहीं बोलना चाहिए। |
| नित्यं स्वाध्यायमाचरेत्। | नित्य स्वाध्याय करे। |
| गुरुभ्यः ज्ञानमादद्यात्। | गुरुओं से ज्ञान प्राप्त करे। |
| धर्मं परिपालयेत् स्वीयम्। | अपने धर्म का पालन करे। |
| गतं न जातु शोचेयुः। | व्यतीत का शोक नहीं करना चाहिए। |
| छात्राः नित्यं संस्कृतं पठेयुः। | छात्रों को सदा संस्कृत पढना चाहिए। |
| भक्तौ मन्दिरं गच्छेताम्। | भक्तों को मन्दिर जाना चाहिए। |
| तौ कृष्णस्य स्तुतिं पठेताम्। | उन्हें कृष्ण की स्तुति पढनी चाहिए। |
| नरः कर्म समाचरेत्। | मनुष्य को काम करना चाहिए। |
| पुत्रं विद्यासु योजयेत्। | पुत्र को विद्याध्ययन में लगाना चाहिए। |
| सज्जनैः सङ्गतिं कुर्यात्। | सज्जनों का सङ्ग करना चाहिए। |
| आत्मानं पात्रतां नयेत्। | स्वयं को योग्य बनाना चाहिए। |
| दिवा शयनं परित्यजेत्। | दिन में सोना छोड देना चाहिए। |
| अपमानं न प्रकाशयेत्। | अपमान को प्रकाश में नहीं लाना चाहिए। |

स्वेषां सहाय्यं कुर्यात्। आत्मीय लोगों की सहायता करनी चाहिए।
मधुरं व्याहरेत् वचः। मधुर वचन बोलना चाहिए।
अक्लेशं धनमर्जयेत्। बिना क्लेश के धनार्जन करना चाहिए।
लोकमावर्जयेद् गुणैः। गुणों से लोगों को झुकाना चाहिए।
चिन्तयेत् लोककल्याणम्। लोक कल्याण का विचार करना चाहिए।
धनं प्राणहरं त्यजेत्। प्राणों के हरने वाले धन को छोड देना चाहिए।
कुर्याद् अद्यैव श्वः कार्यम्। कल का काम आज ही करना चाहिए।
ईश्वरं स्मरेत् नित्यम्। ईश्वर का रोज स्मरण करना चाहिए।
श्री कृष्णं शरणं व्रजेत्। श्री कृष्ण के शरण में जाना चाहिए।
दिवसं सार्थकं कुर्यात् दानाध्ययनंकर्मभिः।
दान अध्ययन और कर्म से दिन को सार्थक करना चाहिए।

लिखत प्रश्नानामुत्तराणि—

किं ब्रूयात् ? किं भूतं सत्यं न ब्रूयात् ? कं नित्यमाचरेत् ? किम् आदद्यात् गुरुभ्यः ? कं न त्यजेत् ? बुधाः किं न शोचेयुः ? छात्रौ किं पठेताम् ? भक्तौ क्व गच्छेताम् ? कां पठेतां तौ ? किं सम्यक् आचरेन्नरः ? कं हि संशोधयेत् सुधीः ? कं विद्यासु नियोजयेत् ? कैः कैः सङ्गतिं कुर्यात् ? आत्मानं क्व नयेन्नरः ? दिवा किं सः परित्यजेत् ? किं न प्रकाशयेत् प्राज्ञः ? प्रयतेत कस्मै नित्यम् ? केषां साहाय्यमाचरेत्? किं भूतं व्याहरेद् वचः ? कथंकारं धनमर्जयेत् ? कैः लोकमावर्जयेत् ? चिन्तयेत् कस्य कल्याणम् ? कथं भूतं धनं त्यजेत् ? श्वः कार्यं कदा कुर्यात् ? केन केन दिवसं सार्थकं कुर्यात् ? कं नित्यं संस्मरेज्जनः ? कं चेह शरणं व्रजेत् ?

रचयत वाक्यानि— प्रियम्, नित्यम्, गतम्, श्वः, समीक्ष्य, कुर्यात्, ब्रूयात्, परित्यजेत्, स्मरेत्, व्रजेत्, आवर्जयेत्, शरणम्, सत्यम्।

शब्दरूपाणि— ज्ञानम् ज्ञाने ज्ञानानि वचः वचसी वचांसि

धातुरूपाणि— पठेत् पठेताम् पठेयुः
पठेः पठेतम् पठेत
पठेयम् पठेव पठेम

सुभाषितम्— न हीनो यो धनैःहीनः धनिकः स मतो गुणी।
विद्यारत्नेन यो हीनः स हीनः सर्ववस्तुषु ॥

—०—

## अष्टादशः पाठः

उपसर्गाः— प्रादयः क्रियायोगे उपसर्गसंज्ञकाः भवन्ति। उपसर्गेण धात्वर्थः परिवर्तनं लभते। ते हि- प्र परा अप् सम् अनु अव निस् निर् दुस् दुर् वि आङ् नि अधि अपि अति सु उत् अभि प्रति परि उप इति द्वाविंशतिः।

सोपसर्गाः क्रियाः—

| | | | |
|---|---|---|---|
| आगच्छति | = आता है | विवदति | = विवाद करता है |
| उद्भवति | = उत्पन्न होता है | प्रवहति | = बहता है |
| अवतरति | = उतरता है | आवर्जयति | = झुकाता है |
| परित्यजति | = छोड़ता है | प्ररोहति | = उगता है |
| व्याहरति | = बोलता है | अनुभवति | = अनुभव करता है |
| प्रहरति | = प्रहार करता है | कथंभूतः | = कैसा |

तत्र वाक्यानि—

पुरा लोकाः संस्कृतं व्याहरन्ति स्म। पहिले लोग संस्कृत बोलते थे।
तदा तापसाः वनेषु न्यवसन्। उस समय तपस्वी लोग वनों में रहते थे
छात्रः विद्यालयात् आगच्छति। छात्र विद्यालय से आता है।

अहं मन्दिरात् गृहं प्रयास्यामि। मैं मन्दिर से घर चला जाऊँगा।
शवरः पर्वतात् अवतरिष्यति। भील पहाड से उतरेगा।
मानुषः अश्वम् आरोहति। मनुष्य घोडे पर चढता है।
रत्नानि समुद्रात् उदभवन्। समुद्र से रत्न उत्पन्न हुए।
गजः दन्ताभ्यां प्रहरिष्यति। हाथी दाँतों से प्रहार करेगा।
छात्राः दिवाशयनं परित्यजयेयुः। छात्र दिन में सोना छोड दें।
ऊषरे बीजानि न प्ररोहन्ति। ऊषर में बीज नहीं उगते हैं।
गुणैरेवावर्जयन्तिलोकान्प्राज्ञाः। गुणी गुणोंसेहीलोगोंकोझुकालेते हैं
सज्जनाः सदैव सत्यं वदन्ति। सज्जन पुरुष सदा सत्य बोलते हैं।
विदेशेषु क्लेशमायान्ति प्राज्ञाअपि। विदेश में विद्वानोंकोभीक्लेशहोताहै
अकारणमेवमिथोविवदन्तिमूर्खाः। मूर्ख निरर्थक आपस में झगडते हैं।
सज्जना दोषान्त्यक्त्वा गुणान्गृह्णन्ति। सज्जन दोषों को छोड कर गुण ग्रहण करते हैं।
धीमतां कालः काव्यशास्त्रविनोदेन गच्छति। बुद्धिमानों का समय काव्य शास्त्रों के विनोदो से जाता है।

लिखत प्रश्नानामुत्तराणि—

के संस्कृतं व्याहरन्ति स्म ? क न्यवसन् तापसाः ? कस्मात् आगच्छन्ति छात्राः ? कस्मात् गृहं प्रयास्यामि अहम् ? कस्मात् अवतरिष्यति शवरः ? कम् आरोहति मानुषः? कस्मात् रत्नानि उदभवन् ? काभ्यां प्रहरिष्यति गजः ? किं परित्यजेयुः छात्राः ? क बीजानि न प्ररोहन्ति ? कैः आवर्जयन्ति लोकान् प्राज्ञाः ? के सदैव सत्यं व्याहरन्ति ?

रचयत वाक्यानि—

आगच्छति, प्रयाति, प्रणमति, निवसन्ति, प्रयच्छति, उपानयन्, आनयत्, उदभवन्, अनुभवन्ति, अवतरिष्यति, प्रभवि—

ष्यामि, विवदतः, सञ्जायन्ते, प्रतपति, विजयते, प्ररोहति, व्याहरन्ति स्म, प्रहरिष्यति, आहरिष्यति, अनुहरन्ति, परित्यजन्ति, आहरन्ति।

शब्दरूपाणि— पुत्रः पुत्रौ पुत्राः रत्नम् रत्ने रत्नानि

क्रियारूपाणि— अवसत् अवसताम् अवसन्
अवसः अवसतम् अवसत
अवसम् अवसाव अवसाम

व्याकरणसुभाषितम्—

उपसर्गेण धात्वर्थो बलादन्यत्र नीयते।
प्रहाराहारसंहारविहारपरिहारवत् ॥

—०—

## एकोनविंशः पाठः

विशेषणानि— शब्दसमूहो वाक्यम्। वाक्ये शब्दानां विशेषणानि भवन्ति। यः शब्दोऽन्यशब्दस्य विशेषतामभिव्यञ्जयति स तस्य विशेषणम्।

पर्यायाः—

| | | | | | |
|---|---|---|---|---|---|
| चञ्चलः | = | चपलः | मुदितः | = | प्रसन्नः |
| कातरः | = | भीरुः | मन्दः | = | अलसः |
| श्यामः | = | असितः | वन्यः | = | जाङ्गलः |
| अहंयुः | = | अहंकारवान् | स्वादूनि | = | मधुराणि |
| तुङ्गः | = | उच्चः | पुष्पितः | = | संजातपुष्पः |
| विशालः | = | महान् | निपुणः | = | प्रवीणः |

सविशेषणानि वाक्यानि—

कृपालुः देवः विश्वं रक्षति। दयालु भगवान् विश्व की रक्षा करता है।
ग्रीष्मे सूर्यः प्रचण्डो भवति। ग्रीष्मऋतु में सूर्य तेज हो जाता है।

आषाढे श्यामाः मेघा वर्षन्ति। आषाढ में काले बादल बरसते हैं।
सज्जनाः पुरुषाः परानुपकुर्वन्ति। सज्जन दूसरों का उपकार करते हैं।
वराः बालाः धूलौ न खेलन्ति। अच्छे लड़के धूल में नहीं खेलते हैं।
योग्याःछात्राःपरीक्षासूत्तीर्णा भवन्ति। योग्यछात्रपरीक्षामेंउत्तीर्ण होते हैं
कातरो नरः कार्यात् पलायते। कायर पुरुष काम से भागता है।
कृष्णोऽपि पिकः मधुरं वदति। काला कोयल मधुर बोलता है।
श्वेतोऽपि वकः हंसो न भवति। सफेद बगला हंस नहीं होता है।
भयङ्कराः सर्पा विलेषु वसन्ति। भयङ्कर सर्प विलों में रहते हैं।
पूर्णः चन्द्रः आकाशे भाति। पूरा चन्द्रमा आकाश में शोभा देता है
वर्षासु मुदिता भेका नदन्ति। वर्षा में प्रसन्न मेढक टर्राते हैं।
वृक्षेषु स्वादूनि फलानि जायन्ते। वृक्षों पर मधुर फल लगते हैं।
बालःमेलासुनवानिवस्त्राणिधरन्ति। मेलेपरबालक नयेवस्त्रपहनते हैं
तुङ्गास्ताला वरं न फलन्ति। ऊँचे ताड अच्छे फल नहीं देते हैं।
रक्तानि भवन्ति पलाशस्य पुष्पाणि। टेसू के फूल लाल होते हैं।
सदाफलो भवति नारिकेलः। नारियल का वृक्ष सदाफली होता है।
नवानि पल्लवानिधरन्तिवृक्षा वसन्ते। वसन्तमेंवृक्षनयेपत्तेधारणकरते हैं
वर्षारम्भे आम्रस्य फलानि परिपाकं लभन्ते। वर्षा के आरम्भ में आम के फल पकते हैं।

लिखत प्रश्नानामुत्तराणि—

कथंभूतो देवः विश्वं रक्षति? कदा सूर्यः प्रचण्डं तपति? कदा चन्द्रः नवीनो भवति? कदा श्यामाः मेघा गर्जन्ति वर्षन्ति च? के सदैव परोपकारं कुर्वन्ति? कथं भूता बालाः धूलौ न खेलन्ति? कथंभूताः छात्राः परीक्षासु उत्तीर्णा भवन्ति? कथंभूतो नरः कार्यक्षेत्रात् पलायते? कः कृष्णोऽपि कोकिलेषु न मिलति? कथंभूतो वकः हंसेषु प्रविसति? क निवसन्ति भयंकराः सर्पाः? कथंभूतः

चन्द्रः पूर्णिमायामाकाशे विभाति ? कथंभूता भेकाः जलाशयेषु तरन्ति ? कथंभूता वृक्षाः स्वादूनि फलानि न फलन्ति ? केषां पुत्रा उत्सवेषु नवानि वस्त्राणि धरन्ति गच्छन्ति च देवमन्दिरम् ? क्व सदाफलो नारिकेलः संजायते ? क्व पुष्पिताः पलाशाः वनस्य शोभां वर्धयन्ति ? कदा वृक्षा नवानि पल्लवानि पुष्पाणि फलानि च धरन्ति ? कदा वयं पक्वानि आम्रफलानि चूषामः ?

रचयत वाक्यानि— तुङ्गः, अहंयुः, श्यामः, कातरः, चञ्चलः, मन्दः, मुदितः, वन्यः, स्वादूनि, पुष्पितः, निपुणः ।

शब्दरूपाणि—

| | | | | | |
|---|---|---|---|---|---|
| कः | कौ | के | कस्मात् | काभ्यां | केभ्यः |
| कम् | कौ | कान् | कस्य | कयोः | केषाम् |
| केन | काभ्याम् | कैः | कस्मिन् | कयोः | केषु |
| कस्मै | काभ्याम् | केभ्यः | | | |

अस्धातो पञ्चलकारेषु रूपाणि—

| | | | | | | |
|---|---|---|---|---|---|---|
| लट्— | अस्ति | स्तः | सन्ति | लोट्— | अस्तु | स्ताम् | सन्तु |
| | अस्सि | स्थः | स्थ | | एधि | स्तम् | स्त |
| | अस्मि | स्वः | स्मः | | असानि | असाव | असाम |

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| लृट्— | भविष्यति | भविष्यतः | भविष्यन्ति | लिङ्— | स्यात् | स्याताम् | स्युः |
| | भविष्यसि | भविष्यथः | भविष्यथ | | स्याः | स्यातम् | स्यात |
| | भविष्यामि | भविष्यावः | भविष्याम | | स्याम् | स्याव | स्याम |

| | | | |
|---|---|---|---|
| लङ्— | आसीत् | आस्ताम् | आसन् |
| | आसीः | आस्तम् | आस्त |
| | आसम् | आस्व | आस्म |

सुभाषितम्— संस्कृतं यस्तु जानाति स देवो न तु मानुषः ।
संस्कृतं यो न जानाति न देवो न तु मानुषः ॥

# विंशः पाठः

## गृहम्

| | | | |
|---|---|---|---|
| शब्दकोषः-इदम् | एतत् | शैलखण्डैः | शिलाभिः |
| मम | मामकम् | दुग्धम् | क्षीरम् |
| द्रव्यैः | वस्तुभिः | कारितम् | निर्मापितम् |
| निर्मितम् | कृतम् | महानसम् | भोजनगृहम् |
| सुधा | चूर्णम् | सूदः | पाचकः |

इदम् गृहम् । कस्य गृहमिदम् ? इदं मम गृहम् । कैः कैः द्रव्यैः निर्मितमिदम् ? इष्टिकाभिः सुधया शैलखण्डैश्च निर्मितमेतत् । केन कारितमिदम् ? एतन्मम पितामहेन कारितमासीत् । कति भूमिकाः सन्त्यत्र ? अस्मिन् तिस्रो भूमिकाः सन्ति । तासु बहवः कोष्ठाः सन्ति । तेषु कोष्ठेषु बहूनि शयनभवनानि स्नानागारं महानसं चास्ति । तत्र महानसे पाचकः भोजनं पचति । स ओदनं रोटिकाः शाकानि लड्डुकानि वाटिका दधि दुग्धमन्यानि च खाद्यवस्तूनि भोक्तुं सज्जीकरोति । गेहे बहूनि वस्तूनि भवन्ति । तत्र पीठानि फलकाः पर्यङ्काः लेखनाधाराः पुस्तकाधाराश्च सन्ति । ननु कैः कैः द्रव्यैः आच्छादितमिदं गृहम् ? इदं तावत् मृत्खर्परैराच्छादितमस्ति । अस्य प्राङ्गणे एका वापी वर्तते । तस्यां शीतलानि मधुराणि च सन्ति जलानि । अपि युष्माकं निवासस्योपकण्ठे गृहोपवनम् ? आम्, वर्तते तत्र गृहोपवनम् । अहो ! इदमत्र रुचिरं गृहोपवनम् । एतस्मिन् बहुविधानि पुष्पाणि विकसितानि सन्ति । वयमत्र खेलामः, निवसामश्च सुखेन गृहपरिकरेऽस्मिन् । गृहे चास्मिन्—

अन्नमस्ति जलं चास्ति धनमस्ति च गोधनम् ।
जननीजनकौ च स्तः बान्धवाश्च गृहेऽत्र नः ॥

लिखत प्रश्नानामुत्तराणि—

किमिदम्? कैः द्रव्यैः कृतमिदम्? केन कारितमिदम्? अत्र कति भूमिकाः सन्ति? तत्र कति कोष्ठाः सन्ति? कुत्र भोजनं पचति सूदः? स कानि कानि खाद्यानि करोति? कानि कानि उपकरणानि महानसे सन्ति? कीदृक् गृहमिदम्? कैः छादितं वर्तते गृहम्? क्व वर्तते वापी? तत्र कीदृक् किमस्ति? क्व निवसामो वयम्?

रचयत वाक्यानि — कति, अत्र, वापी, जलानि, तिस्रः, कीदृक्, तासु इदम्, सन्ति, उपवने, सूदः, मधुरम्।

सुभाषितम्—आद्यमावश्यकं भोक्तुं द्वितीयं वसनं नृणाम्।
तृतीयं वाञ्छितं गेहमावश्यकमिदं त्रयम्॥

# एकविंशः पाठः

## विद्यालयः

| | | | | | |
|---|---|---|---|---|---|
| शब्दकोषः—भव्यम् | = | सुन्दरम् | कक्षा | = | वर्गः |
| पुरः | = | अग्रे | प्राज्ञाः | = | विज्ञाः |
| संवेशिनी | = | काष्ठपीठम् | अध्यापकः | = | पाठकः |
| आसन्दी | = | पीठासनम् | पूर्वजाः | = | पुरातनाः |
| उपविशन्ति | = | तिष्ठन्ति | विपुलम् | = | प्रचुरम् |

अयमस्माकं विद्यालयः। विशालं भव्यं च भवनमिदम्। नगरात् बहिः वर्तते विद्यालयोऽयम्। अस्याः पुरो भागे उद्यानमस्ति। भवनेऽस्मिन् तिस्रः भूमिकाः सन्ति। भूमिकासु कोष्ठाः सन्ति। कोष्ठेषु कक्षाः सन्ति। कक्षायां छात्राः संवेषिनीषु उपविशन्ति। अध्यापकाश्च तत्र आसन्दीषु तिष्ठन्ति। अध्यापकस्य पुरस्तात् फलकं भवति, यत्र स पुस्तकानि, लेखनीः, मसीपात्रं च रक्षति।

विद्यालयेऽस्माकं प्रथमा मध्यमा शास्त्रीया आचार्या चेति कक्षाः सन्ति। अहं प्रथमायां कक्षायां पठामि। मम कक्षायां चत्वारिंशत् छात्राः सन्ति। सर्वासु कक्षासुत्रीणि शतानि सन्ति छात्राणाम्। शालायां पञ्चदश अध्यापकाः सन्ति। वयमत्र संस्कृतस्य माध्यमेन पठामः शास्त्राणि। अस्माकमध्यापकाः प्राज्ञाः सन्ति।

वयमत्र वेदान्, व्याकरणम्, न्यायशास्त्रम्, ज्योतिषम्, आयुर्वेदम्, पदार्थविज्ञानम्, गणितम्, काव्यानि अन्यानपि च शात्राणि पठामः। पूर्वजैः मुनिभिः कृतेभ्यः शास्त्रेभ्यः विपुलं ज्ञानं लभामहे वयम्। शास्त्रज्ञानं हि नेत्राणि उन्मीलयत्यस्माकम्। यथोच्यते—

अनेकसंशयोच्छेदि परोक्षार्थस्य दर्शकम्।
सर्वस्य लोचनं शात्रं यस्य नास्त्यन्ध एव सः॥

लिखत प्रश्नानामुत्तराणि—

अपि विशालं भवनं विद्यालयस्य अस्माकम्? क्व वर्तते विद्यालयो नः? किं वर्तते विद्यालयस्य पुरो भागे? क्वास्ति विद्यालयः? विद्यालयस्य कतिभूमिकाः सन्ति? भूमिकासु कति कोष्ठाः सन्ति? एकस्मिन् वर्गे सवेकति संवेशिन्यः सन्ति? के आसन्दीषु तिष्ठन्ति? क्व अध्यापकः? पुस्तकानि लेखनीः मसीपात्रं च रक्षति। कत्यध्यापकाः सन्ति विद्यालये किं करोति शास्त्रमस्माकम्?

रचयत वाक्यानि—

पुरः, पुरस्तात्, उद्याने, भूमिकाः; कोष्ठाः; कक्षायाम्; प्रथमायाम्; मुनिभिः प्राज्ञा आसन्दीषु, भव्यम्।

विद्या ददाति विनयं विनयाद्याति पात्रताम्।
पात्रत्वाद्धनमाप्नोति धनाद्धर्म्मं ततः सुखम्

# द्वाविंशः पाठः

## परमेश्वरः

| | | | |
|---|---|---|---|
| शब्दकोषः–ईश्वरः | = परमेश्वरः | कर्त्तुम् | = करने के लिए |
| गोप्ता | = रक्षकः | अकर्तुम् | = उल्टा करने के लिए |
| अखिलम् | = सम्पूर्णम् | समर्थः | = शक्तः |
| जगत् | = संसारः | निग्रहः | = दण्डः |
| वाति | = चलति | अनुग्रहः | = कृपा |
| विभुः | = व्यापकः | ग्लानिः | = हानिः |
| पितामहः | = पितुःपिता | एषः | = अयम् |

ईश्वरो विश्वस्य कर्त्ता भुवनस्य गोप्तेति वेदा वदन्ति। ततः एवाखिलं जगत् प्रभवति, तत्रैव प्रकाशते तस्मिन्नेव च लीयते, तज्जलानि इति उपनिषदः प्रमाणम्। तस्यैवाज्ञया सूर्यस्तपति, चन्द्रः प्रकशते वायुश्च वाति। स एव जगतः पिता, गुरुभ्यो गरीयान्, महतो महीयान् आदिबीजम्, स्वयंभूः, देवदेवः, परात्परः, अजन्मा, विभुः अकर्मा अनन्तशक्तिः, आश्चर्यकर्मा, परमात्मा, स्वयं प्रकाशः, पुरुषोत्तमः, देवदेवः महेश्वरः, पितामहः च अस्माकम्, स तु कर्त्तुमकर्त्तुमन्यथाकर्त्तुं समर्थः, स एव सर्वतन्त्रस्वतन्त्रः, स एव निग्रहानुग्रहे प्रभवति, स भक्तानां प्रियः, धर्मगोप्ता, स एष रमणः, स एष शरणं नः, स एष धर्मग्लानौ पापानां वृद्धौ च सत्यां तन्नाशाय रक्षणाय च लोकानां शरीरधर्मा च जायते। स लोकरक्षायै अवतारं गृह्णाति।

लिखत प्रश्नानामुत्तराणि—

कः विश्वस्य कर्ता? कस्मात् अखिलं जगत् जायते? कस्मिन् लीयते संसारः? कस्याऽऽज्ञया सूर्यः तपति? कः अस्माकं पितामहः? किं वदन्ति वेदाः? क उपनिषदः प्रमाणम्? कः कर्त्तुम् अकर्त्तुम् अन्यथाकर्त्तुं च समर्थः? कः भक्तानां प्रियः? क धर्म

गोपायति ? कदा स आत्मानं सृजति ?

रचयत वाक्यानि—

विश्वस्य, गोप्ता, ततः, प्रभवति, आज्ञया, वाति, गरीयान्, महीयान्, निग्रहः, अनुग्रहः, यदा, अभ्युत्थानम्, सृजामि।

शब्दरूपाणि—कर्त्ता कर्त्तारौ कर्त्तारः गोप्ता गोप्तारौ गोप्तारः

धातुरूपाणि—जायते जायेते जायन्ते लीयते लीयेते लीयन्ते

वाचनम्—यदा यदा हि धर्मस्य ग्लानिर्भवति भारत।

अभ्युत्थानमधर्मस्य तदात्मानं सृजाम्यहम् ॥

—०—

## त्रयोविंशः पाठः

## गौः माता

शब्दकोषः—

| | | | | | |
|---|---|---|---|---|---|
| मङ्गलदर्शना | = | शुभदर्शना | वर्णाः | = | रङ्गाः |
| प्रकृत्या | = | स्वभावेन | घृतम् | = | आज्यम् |
| साध्वी | = | सुस्वभावा | पथ्यम् | = | स्वास्थ्यकरम् |
| शृङ्गम् | = | विषाणम् | धान्यम् | = | अन्नम् |
| परिणाहि | = | विशालम् | मुख्यम् | = | प्रधानम् |
| सास्ना | = | गलकम्बलम् | भुक्त्वा | = | खादित्वा |
| धात्री | = | रक्षिका | तोयम् | = | जलम् |

गौः मङ्गलदर्शना। सा प्रकृत्या आकारेण च परमा साध्वी भवति। तस्याः सखुराः चत्वारः पादाः भवन्ति। तस्याः पुच्छं लम्बम्, सरलं शृङ्गयुगलम्, शोभने विशाले च नेत्रे, शिथिलं कर्णद्वयं च परिचाययन्ति साधुताम्। गोः सास्ना भवति। तस्याः परिणाहि ऊधः, चत्वारः पयोधराः स्तनाश्च भवन्ति।

गवाम् अनेके वर्णा भवन्ति। ताः श्यामाः गौर्यः धवला धूसराश्च भवन्ति। ताः भारताद् बहिः जापानेऽमेरिकायामपि च जायन्ते।

गौः घासं बुसं धान्यं च खादति। साऽल्पचर्वितं निगिलति खाद्यम्, पुनः रोमन्थं च करोति। सा धात्री अस्माकम्। सा दुग्धं ददाति अस्मभ्यम्। तस्या दुग्धेन बालाः वृद्धाः युवानश्च जीवन्ति। तस्या दुग्धाद् दधि भवति, दध्नः तक्रम्, नवनीतम्, घृतं च जायते। गोः दुग्धमारोग्यकरं पथ्यं भवति। शिशुभ्यः रुग्णेभ्यश्च वैद्याः तद् पथ्यं दातुम् आदिशन्ति। गौः बलीवर्दान् जनयति, ये च हलेन क्षेत्राणि कृष्ट्वा धान्यम् उत्पादयन्ति येन वयं जीवामः। पुरा गोधनं जनानां मुख्यं धनमासीत्। तदा लोकाः स्वस्थाः बलवन्तः वीराश्चाऽभवन्।

गौः अस्माभिः माता इव पूजनीया, देवता इव दर्शनीया, दीना इव दयनीया, निधिरिव रक्षणीया चाऽस्ति।

पुरा भगवान् श्रीकृष्णः गोव्रजं रक्षित्वा लोकानां कृते उदाहरणम् उपस्थापयति स्म। परमोपकारिण्यः सन्ति खलु गावोऽस्माकम्। गोरक्षणमस्माकं कर्तव्यम्।

लिखत प्रश्नानामुत्तराणि—

कास्ति मङ्गलदर्शना? कस्याः पुच्छं लम्बम्? कस्या नेत्रे शोभने विशाले च? क्व भारताद् बहिः जायन्ते गावः? का रोमन्थं करोति? काऽस्माकं धात्री? किं किं ददाति गौः? गोः वत्साः किमुपकुर्वन्ति? के क्षेत्रेषु हलं वहन्ति? के धान्यमुत्पादयन्ति? किं पुरा जनानां मुख्यं धनमासीत्? केव गौः दर्शनीया? केव सा रक्षणीया? कः गोरक्षणं कृत्वा उदाहरणमुपस्थापयति स्म? केन हेतुना गावः लोकस्य मातरः?

रचयत वाक्यानि—

प्रकृत्या, साध्वी, पुच्छम्, नेत्रे, सास्ना, ऊधः, वर्णाः, रोमन्थम्, बुसम्, धात्री, पथ्यम्, धान्यम्, मुख्यम्, देवता इव, उदाहरणम्, तृणानि, मातरः।

शब्दरूपाणि—गौः गावौ गावः। गाम् गावौ गाः
गवा गोभ्याम् गोभिः। गवे गोभ्याम् गोभ्यः

धातुरूपाणि—गिलति गिलतः गिलन्ति, दिशति दिशतः दिशन्ति

वाचनम्—भुक्त्वा तृणानि शुष्काणि पीत्वा तोयं जलाशयात्।
दुग्धं ददति लोकेभ्यो गावो लोकस्य मातरः॥

—०—

# चतुर्विंशः पाठः

## रामायणी कथा

शब्दकोषः—

| | | | | | |
|---|---|---|---|---|---|
| सुतौ | = | पुत्रौ | विघातकान् | = | नाशकान |
| आत्मजायाः | = | सुतायाः | मुनिभिः | = | तापसैः |
| साकम् | = | सार्धम् | अनुजः | = | लघुभ्राता |
| आस्थाय | = | उपविश्य | पितुः | = | जनकस्य |
| कृतविद्या | = | लब्धविद्या | पिनाकम् | = | धनुः |
| यागस्य | = | यज्ञस्य | चिरम् | = | बहुकालम् |

आसीत् पुरा अयोध्यायां महाराजो दशरथः। तस्य कौशल्या कैकेयी सुमित्रा चेति तिस्रो भार्या आसन्। ताभ्यः तस्य चत्वारः पुत्राः अभवन्। कौशल्यायाः रामः कैकेय्याः भरतः, लक्ष्मणशत्रुघ्नौ च सुमित्रायाः सुतौ आस्ताम्।

ते राजकुमाराः गुरोः वशिष्ठात् सर्वाणि शास्त्राणि अपठन्, विश्वामित्रात् च शस्त्रविद्याम्। कृतविद्यास्ते सुशीलाः विनीताः लोकप्रिया—

श्चासन् । ते मातापित्रोः भक्ताः गुरूणामाज्ञाकराः प्रजायाः स्नेहभाजनाश्च अभवन् । तेषु रामः परमः पितुः भक्तः आसीत् ।

एकदा रामलक्ष्मणौ विश्वामित्रेण सह तस्याश्रममगच्छताम् । विश्वामित्रः मुनिभिः साकं यज्ञमकरोत् । तत्र राजकुमारौ तौ यागस्य विघातकान् राक्षसान् अहताम्, अरक्षतां च ऋषीन् । ततस्तौ मुनिना सार्धं जनकपुरमगच्छताम् । तत्र जनकस्य आत्मजायाः स्वयंवरोऽभवत् । रामस्तत्र शिवस्य पिनाकं भङ्क्त्वा सीतां पर्यणयत् । अन्येषामपि तस्य भ्रातृणां तत्रैव जनकगृहे विवाहा अभवन् । ततोऽयोध्यायां महाराजः दशरथो रामाय राज्यं दातुमैच्छत् । सर्वेऽपि तदाराज्याभिषेकस्य संभाराः कल्पिता आसन् । एतस्मिन्नन्तरे मन्थरा नाम दासी कैकेयीम्—'रामे भूपतौ तव सुनो दासो भविष्यति, न तदा त्वां कोऽपि राजमातरं कथयिष्यति' इत्युपाजपत् । कैकेयी च नृपालमुपजप्य भरताय राज्यं रामाय वनवासं च दातुं हठमकरोत् ।

ततो राजा रामाय वनवासमददात् । पितुः आदेशेन रामः सीता च वनमगच्छताम् । लक्ष्मणोऽपि तौ अन्वगच्छत् । वने च तत्र राक्षसानां राजा रावणः सीतामहरत् । रामोऽपि बालिनं हत्वा सुग्रीवेण सह मैत्रीमकरोत् । स मित्रस्य साहाय्येन महत्या वानराणां सेनया रावणस्य राजधानीं लङ्कां समाक्रमत् । ततो रामरावणौ घोरम् अयुध्यताम् । जनाः 'रामरावणयोर्युद्धं रामरावणयोःसमम्, इत्यकथयन् । रामः सर्वं राक्षसकुलमहन् । रावणस्यानुजो विभीषणस्तु युद्धात् प्रागेव रामं शरमणगच्छत् । रामः तं लङ्कापतिं कृत्वा सीतामादाय सपरिकरोऽयोध्यां प्रत्यागच्छत् । तत्र राजासने आस्थाय चिरं प्रजामशिषत् । स लोकाराधनतत्परः आसीत् । तस्य राज्ये लोकाः समृद्धाः सुरक्षिताः सुखिनश्चासन् । रामचन्द्रो लोकमर्यादामरक्षत् । तं जना मर्यादापुरुषोत्तममाहुः ।

लिखत प्रश्नानामुत्तराणि—

का आसीत् दशरथस्य राजधानी ? दशरथस्य कति भार्याः आसन् ? कानि तासां नामानि ? दशरथस्य कति पुत्रा आसन् ? कस्मात् राजकुमाराः शास्त्राणि अपठन् ? केन साकं ते आश्रममगच्छन् ? कस्य ते रक्षाम् अकुर्वन् ? क्व रामस्य परिणयः अभवत् ? मन्थरा किम् अकरोत् ? दशरथः रामं किम् आदिशत् ? रावणः किमकरोत् ? रामः किमकरोत् ? केन जनाः रामं मर्यादापुरुषोत्तमं कथयन्ति ?

रचयत वाक्यानि—

अयोध्यायाम्, भार्याः, ऋषिभिः, सीतायाः, वनवासम्, यागस्य, राक्षसानाम्, पितुः, मातुः, भ्रातृषु, वन्दामहे, भजामहे ।

शब्दरूपाणि—

सर्वः सर्वौ सर्वे सर्वम् सर्वे सर्वाणि

भ्राता भ्रातरौ भ्रातरः सीता सीते सीताः

धातुरूपाणि—

हन्ति हतः घ्नन्ति अहन् अहताम् अघ्नन्

वन्दते वन्देते वन्दन्ते वन्दसे वन्देथे वन्दध्वे

वन्दे वन्दावहे वन्दामहे

वाचनम्—

वन्दामहे महेशानचण्डकोदण्डखण्डनम् ।
जानकीहृदयानन्दचन्दनं रघुनन्दनम् ॥

—०—

# पञ्चविंशः पाठः

## भारतीकथा

शब्दकोषः—

| | | | | | |
|---|---|---|---|---|---|
| वंशे | = | कुले | भागिनेयः | = | भगिनीपुत्रः |
| भार्या | = | पत्नी | पाणिभ्याम् | = | हस्ताभ्याम् |
| कुशलाः | = | दक्षाः | अनर्घाणि | = | बहुमूल्यानि |
| द्वेषम् | = | वैरम् | विचित्रा | = | अद्भुता |
| दूतम् | = | सन्देशहरम् | स्वर्गम् | = | देवलोकम् |
| अनेके | = | बहवः | विश्वस्य | = | सर्वस्य |
| रणे | = | संग्रामे | विजित्य | = | जित्वा |

पुरा भरतस्य वंशे धृतराष्ट्रः पाण्डुश्च युवराजौ आस्ताम्। धृतराष्ट्रः ज्येष्ठः अन्धश्च, पाण्डुः कनिष्ठः रुग्णश्च अभवत्। गान्धारी धृतराष्ट्रस्य भार्या आसीत्। पाण्डोश्च कुन्ती माद्री च भार्ये अभवताम्। कुन्तीं बान्धवाः पृथाम् आहुः। धृतराष्ट्रस्य ते दुर्योधनः दुःशासनः दुःशल्यः, सर्वे च शतं पुत्राः आसन्। पाण्डोश्च पञ्च पुत्राः। तेषु युधिष्ठिरः भीमः अर्जुनश्च पृथायाः पुत्राः अभवन्। नकुलः सहदेवश्च माद्रीसुतौ अभवताम्। जनाः पाण्डोः सुतान्, पाण्डवान्, धृतराष्ट्रपुत्रान् च कौरवान् आहुः। पाण्डवेषु कौरवेषु चापि युधिष्ठिरः गुणैः श्रेष्ठः ज्येष्ठश्च आसीत्। इति उपरते पाण्डौ धृतराष्ट्रः तं युवराजं विधाय भीष्मपितामहस्य विदुरस्याऽपि च मन्त्रित्वे राज्यमशिसत्। कालेन कुमाराः सर्वासु विद्यासु कुशलाः अभवन्। विशेषेण युधिष्ठिर राजनीतौ, भीमः मल्लयुद्धेषु, अर्जुनः धनुर्विद्यायाम् नकुलः अश्वसंचालनेषु, सहदेवः ज्योतिषे, दुर्योधनः विविध युद्धकलासु दुःशासनश्च कूटनीतिषु निपुणः आसीत्।

अन्धे पितरि राजकार्यं प्रायः दुर्योधन–दुःशासनौ एव अकुर्वाताम्। कौरवाः पाण्डवेभ्यः भयम्, पदे पदे पराजयं च लब्ध्वा तेभ्यः द्वेषं कर्त्तुम् आरभन्त। मायाविनस्ते द्यूते पाण्डवान् जित्वा तेषां सर्वस्वम् अपाहरन्। सभार्यास्ते द्वादश वर्षाणि वनेऽवसन्, वत्सरम् अज्ञातवासं च। वनात् प्रत्यागत्य कुलस्य कल्याणमिच्छुः युधिष्ठिरः दुर्योधनेन सन्धिं कर्त्तुम् ऐच्छत्। स श्रीकृष्णं दूतं व्यसृजत्। वासुदेवः पाण्डवानां कृते दुर्योधनाद् अर्धं राज्यम् अचायत, अन्ते च 'पञ्चभिरेव ग्रामैः अपि प्रदत्तैः सन्तुष्टाः भविष्यन्ति त, इति कौरवसभायां व्याहरत् सः। दुर्योधनस्तु, सूच्यग्रं नैव दास्यामि विना युद्धेन केशवः, इत्यघोषयत्।

प्रारब्धः संग्रामः। वीराः रणे प्राणान् व्यमुञ्चन्। तत्र गुरून् शिष्याः, पितॄन् पुत्राः, भ्रातॄन् भ्रातरः पौत्रान् पितामहाः, पितामहान् पौत्राः पितृव्यान् पितृव्यपुत्राः भागिनेयाः मातुलान् मित्राणि मित्राणि च अघ्नन्। अन्ते भीमः दुःशासनं हत्वा तस्य रुधिरोक्षिताभ्यां पाणिभ्यां द्रौपद्याः केशपाशान् अबध्नात्।

ततः धर्मराजं युधिष्ठिरं राज्येऽभ्यषिञ्चन्। पाण्डवाः देशान् विजित्य हस्तिनापुरम् (दिल्लीम्) राजधानीम् अकुर्वन्। धर्मराजः राजसूयं नाम यज्ञम् अकरोत्। तं नृपालाः अनर्घाणि रत्नानि उपाहरन्। चिरं समृद्धं राज्यं भुक्त्वा पाण्डवाः हैमालीयेन मार्गेण स्वर्गम् आवाप्नुवन्।

छात्राः! व्यासस्य महाभारतं विशालं विशिष्टं च काव्यम्। तत्र विविधाः विचित्राः च कथाः सन्ति। संस्कृतं ज्ञात्वा ताः पठिष्यथ यूयम्। वयं तं मुनिवरं व्यासं नमामः।

लिखत प्रश्नानामुत्तराणि–

धृतराष्ट्रस्य कति पुत्राः आसन्? के कौरवाः अभवन्? के

पाण्डवाः अभवन् ? पाण्डौ उपरते कः राजा अभवत् ? केन हेतुना कौरवाः पाण्डवेभ्यः द्वेषमकुर्वन् ? केन हेतुना पाण्डवाः वनमगच्छन् ? कस्मात् युधिष्ठिरः दुर्योधनेन सन्धिमैच्छत् ? किमर्थं श्रीकृष्णः दूतोऽभवत् ? संग्रामे के के कान् कान् अघ्नन् ? केषां विजयोऽभवत् ? क्व पाण्डवाः राजधानीमकुर्वन् ?

युवराजौ, बान्धवा, निपुणः, कल्याणम्, पौत्रान्, मित्राणि, हत्वा, चिरम्, देशान्, स्वर्गम्, वत्सरम्, कुशलाः।

शब्दरूपाणि—

| | | | | | |
|---|---|---|---|---|---|
| भानुः | भानु | भानवः, | भानुम् | भानू | भानून् |
| भार्या | भार्ये | भार्याः, | नदी | नद्यौ | नद्यः |

धातुरूपाणि—

| | | | | | |
|---|---|---|---|---|---|
| आसीत् | आस्ताम् | आसन्, | अभवत् | अभवताम् | अभवन् |
| करोति | कुरुतः | कुर्वन्ति | अकरोत् | अकुर्वताम् | अकुर्वन् |

वाचनम्—सर्वज्ञाय नमस्तस्मै व्यासाय प्रभविष्णवे।
योऽकरोदद्भुतं काव्यं सारं विश्वस्य भारतम्॥

—०—

# साधुसुभाषितानि

[१]

ईश्वरः सर्वलोकस्य पिता पालयते जगत् ।
स तिलं कुरुते तालं तालं च कुरुते तिलम् ॥

[२]

मूर्खाः कुलेषु प्राज्ञानां सज्जना न च दुर्जनाः ।
प्रसूते कज्जलं दीपः पङ्कः सूते च पङ्कजम् ॥

[३]

प्रायो महाप्रतापानां निष्प्रतापाः प्रसूतयः ।
सूर्यात् संजायते छाया कृशानो भस्मनां चयः ॥

[४]

शोभते दातुराम्रस्य घनच्छायस्य ह्रस्वता ।
अनुदात्तस्य तालस्य तुङ्गतापि न शोभते ॥

[५]

क्रोधं हरति क्रुद्धस्य शीतलं मधुरं वचः ।
तापं हरति तप्तस्य शीतलं मधुरं जलम् ॥

[६]

विनष्टः प्रत्ययो नृणां न पुनः सम्प्रजायते ।
न भूयः कल्पते दध्ने कदाचिद् विकृतं पयः ॥

[७]

महत्त्वमुपकारेण जायते न बृहत्तया ।
खर्जूरीणां प्रजातानां जगत्य तुङ्गतां वृथा ॥

(८)

दुर्गतेष्वपि प्रीयन्ते महान्तः साधवो जनाः ।
प्रीतिः रामस्य सुग्रीवे सुदाम्नि केशवस्य च ॥

—o—

# प्रहेलिकाः

—०—

[१]

चतुष्पदा न गौरस्मि गृहस्था नास्मि गेहिनी।
भूपण्डितसभ्यानां काऽहं कान्तेति प्रोच्यताम् ॥

[२]

शोभते सन्ध्ययोः सम्यग् जायते जलदागमे।
गगने द्योतते स्वैरं कोऽसौ सूर्यो न चन्द्रमाः ॥

[३]

सदारिमध्यो विश्वस्य मित्रं वर्षासु जातो झरणो न भेकाः।
शिरःसु गर्जन् खचरो न यानं वदन्तु कोऽहं शुभकृत् प्रजानाम् ॥

(४)

करौ मम स्तः प्रदर्शयामि वेलां धावामि गोले चरणौ न मे स्तः।
पश्यामि नित्यं नयने न च स्तः विना मुखं कोस्मि वदामि नित्यम् ॥

(५)

आयामि सायं सायं च नित्यं प्रयामि प्रातः प्रातः सदैव।
निद्रान्ति लोका मय्यागतायां निद्रा न भङ्गा माया च काहम् ॥

(६)

दण्डः पताकापरिमण्डितोऽस्मि पत्रावृताङ्गः सरलः सुतुङ्गः।
सुग्रन्थिवानस्मि रसप्रदोस्मि वदन्तु कोहं मधुरोत्तमानाम् ॥

(७)

पक्षौ न मे स्तः चरणौ च न स्तः भ्रमामि नित्यं गगने प्रगल्भः।
बद्धोऽस्मि सूत्रेण सदा प्रियेण कोऽहं विचित्रोऽभिमतः शिशूनाम् ॥

---

१ आसन्दी, २ खद्योतः, ३ वारिदः ४ घटिका, ५ रात्रिः ६ इक्षुः, ७ पतङ्गः.

## संस्कृतस्य महाकवयः

वाल्मीकिः—सदूषणापि निर्दोषा सखरापि सुकोमला ।
नमस्तस्यै कृता येन रम्या रामायणी कथा ॥

व्यासः— नमः सर्वविद तस्मै व्यासाय कविवेधसे ।
चक्र पुण्यं सरस्वत्या यो वर्षमिव भारतम् ॥

कालिदासः-निर्गतामल्लवाक्यस्य कालिदासस्य सूक्तिषु ।
प्रीतिर्मधुरसान्द्रासु मञ्जरीष्विव जायते ॥

बाणः— हृदि लग्नेन बाणेन यन्मन्दोऽपि पदक्रमः ।
भवेत् कविकुरङ्गाणां चापलं तत्र कारणम् ॥

दण्डी— त्रयोऽग्नयः त्रयो वेदाः त्रयो देवास्त्रयो गुणाः ।
त्रयो दण्डिप्रबन्धाश्च त्रिषु लोकेषु विश्रुताः ॥

भवभूतिः—भवभूतेः सम्बन्धात् भूधरभूरेव भारती भाति ।
एतत्कृतकारुण्ये किमन्यथा रोदिति ग्रावा ॥

भासः— सूत्रधारकृतारम्भैः नाटकैः बहुभूमिकैः ।
सपताकैः यशो लेभे भासो देवकुलैरिव ॥

मुरारिः— मुरारिपः भक्तिश्चेद् तदा माघे मति कुरु ।
मुरारिपदभक्तिश्चेत् तदा माऽघे मतिं कुरु ॥

माघः— उपमा कालिदासस्य भारवेरर्थगौरवम् ।
दण्डिनः पदलालित्यं माघे सन्ति त्रयो गुणाः ॥

सुबन्धुः—कवीनामगलद्दर्पो नूनं वासवदत्तया ।
शक्त्येव पाण्डुपुत्राणां गतया कर्णगोचरम् ॥

मयूरः— तावत् कविविहङ्गानां ध्वनिर्लोकेषु शस्यते ।
यावन्नो विशति श्रोत्रे मयूरमधुरध्वनिः ॥

—०—



